**उन्माथ** पु० उन्मथ्यतेऽनेन उद्+मथ-करणे घञ्। आमिष-दानेन मृगादिबन्धनार्थं निवेशिते कूटयन्त्रे (फांद) इति ख्याते। भावे घञ्। विलोड्योत्थापने, हिंसने च।

**उन्माद** पु०उद्+मद-घञ्। चित्तविभ्रमे, भूताद्यावेशात् चित्त स्यानवस्थितौ, विरहिणां स्मरकृतावस्थाभेदे, कायिकरोग-कृते मतिभ्रंशे च। [देवस्य वाद्यभेदे।

**उन्मादन** पु० उद्+मद-णिच्-ल्यु। उन्मत्तताकारके काम-

**उन्मान** न० उद्+मा-करणे ल्युट्। ऊर्द्ध्वमाने स्वर्णादेरुद्धृत्य-मानसाधने, तोलकादौ, परिमाणमात्रे च। [प्रकाशिते च।

**उन्मिषित** त्रि० उद्+मिष-क्त। प्रफुल्ले, विकसिते किञ्चित्

**उन्मीलन** न० उद्+मील ल्युट्। उन्मेषे, विकाशने च।

**उन्मुख** त्रि० उद्+ऊर्द्ध्वं मुखमस्य। ऊर्द्ध्वास्ये, उद्युक्ते च।

**उन्मुद्र** त्रि० उद्गता मुद्रा यस्मात्। त्यक्तमुद्रे, विकसिते च।

**उन्मूलन** न० उन्मूल+णिच्-ल्युट्। उत्पाटने उद्धृतमूलकरणे।

**उन्मेष** पु०उद्+मिष-घञ्। चक्षुरादेरुन्मीलने, किञ्चित्प्रकाशे च

**उप** अव्य०वप-क। अधिकार्थे, हीने, आसन्ने, सामीप्ये, सादृश्ये, प्रतियत्ने-गुणाधाने, व्याप्तौ, पूजायाम् शक्तौ, आरम्भे, दाने, दोषाख्याने, आश्चर्यकरणे अत्यये, निदर्शने च।

**उपकण्ठ** त्रि० उपगतः कण्ठं गति०। निकटे, कण्ठासन्ने च। ग्रामान्ते, अश्वानाम् स्कन्दितगतौ च न०।

**उपकरण** न० उपक्रियतेऽनेन उप-कृ-ल्युट्। प्रधानसाधक गुणेऽङ्गे यथान्नभोजनादौ व्यञ्जनादि, शयने खट्वादि, स्नाने-ऽनुलेपनादि, पूजायां पुष्पादि। भूपादीनां छत्रचामरादि परिच्छेदे च।

**उपकार** पु० उप-कृ-घञ्। प्रधानस्यानुगुण्यसंपादने, उपकृतौ

**उपकारक** त्रि०उप+कृ-ण्वुल्। उपकारकर्त्तरि। स्त्रीत्वे टापि अतइत्त्वे उपकारिका। नृपालये, पटनिर्म्मितराजसदने च

**उपकार्य्य** त्रि० उप+कृ-ण्यत्। उपकारयोग्ये। राजालये, पटनिर्म्मितराजसदने च स्त्री० टाप्।

**उपकुञ्चि** स्त्री० उप+कुनृज-इ। कृष्णजीरके। ण्वुलि टापि अतइत्त्वे। उपकुञ्चिकाप्यत्र तस्यायां सूक्ष्मैलायाञ्च।

**उपकुर्व्वाण** पु० उप-कृ-शानच्। सावधिकब्रह्मचर्य्यकारिणि वेदाध्ययनार्थं कञ्चित्कालं ब्रह्मचर्य्यव्रतधारिणि।

**उपकुल्या** स्त्री० उप+कुल-क्यप्। पिप्पल्याम् उपगतः कुल्यां कृत्रिमं सरः। कुल्यासन्ने त्रि०। [जलाशये

**उपकूप** पु० उपगतः कूपं गति०। कूपसमीपस्थे खातरूपे

**उपक्रम** पु०उप-क्रम-घञ्। उपायज्ञानपूर्व्वकारम्भे, प्रथमारम्भे चिकित्सायाञ्च।

**उपक्रोश** पु०उप+क्रुश-आह्वाने घञ्। निन्दायाम्। आसन्न-क्रोशे त्रि०। अव्ययी०। क्रोशसमीपे अव्य०।

**उपक्रोष्टृ** पु० उप+क्रुश-तृच्। गर्द्दभे। निन्दके त्रि०।

**उपक्लृप्त** त्रि० उप+क्लप-क्त। विन्यस्ते, उपभोगार्थं प्रस्तुते च।

**उपगत** त्रि० उप-गम-क्त। स्वीकृते, उपस्थिते, ज्ञाते च। [च

**उपगम** पु०उप+गम-घञ् अवृद्धिः। समीपगमने, अङ्गीकारे, ज्ञाने

**उपगीति** स्त्री० उप+गै-क्तिन्। आर्य्याविशेषे छन्दोभेदे।

**उपगूह्य** त्रि० उप+गुह-ण्यत्। आलिङ्ग्ये, ग्राह्ये च। भावे ण्यत्। आलिङ्गने।

**उपगूहन** न० उप+गुह-ल्युट्। आलिङ्गने, ग्रहणे च।

**उपग्रह** पु०उप+ग्रह-अप्। कारावन्धने, वन्दीकरणे, उपयोगे अनुकूलने च। कर्म्मणि घञ्। कारारुद्धे वन्द्याम्। ज्योति-षोक्ते ग्रहतुल्ये गगनस्थे ज्योतिःपदार्थे धूमकेत्वादौ च।

**उपग्राह्य** न० उप+ग्रह-ण्यत्। उपढौकने (भेट)।

**उपघात** पु० उप-हन-घञ्। अपकारे, नाशने, रोगे च।

**उपघ्न** पु० उप+हन-क नि०। आसन्ने आश्रये।

**उपचक्र** पु० उपमितं चक्रेण तुल्यनामत्वात्। चक्रवाकपक्षिणि।

**उपचय** पु० उप+चि-अच्। वृद्धौ, उन्नतौ, ज्योतिषोक्तेषु लग्नतः तृतीयषष्ठदशमैकादशस्थानेषु च।

**उपचरित** त्रि० उप+चर-क्त। उपासिते लक्षणया बोधिते च।

**उपचर्य्या** स्त्री० उप+चर-क्यप्। चिकित्सायां, सेवायाञ्च।

**उपचाय्य** पु० उपचीयते संक्रियतेऽसौ नि०। यज्ञे संस्कृताग्नौ।

**उपचार** पु० उप+चर-घञ्। चिकित्सायां, सेवाया, व्यवहारे, उत्कोचे, लक्षणया शक्यार्थत्यागेनान्यार्थपरत्वकल्पने, अयथार्थ-वाक्येन सन्तोषकरणे च उपचारपदं न चेदिदमिति कुमारः।

**उपचित** त्रि० उप+चि-क्त। दग्धे, सन्दिग्धे, सञ्चिते, समा-हिते, अवयववृद्ध्या वहुलीभूते च।

**उपचित्रा** स्त्री०उपगता चित्रं वर्णम्। उन्दुरपर्ण्याम् चित्रा-तारासमीपस्थायां ख्यातौ च।

**उपच्छन्द** पु० उप+छन्द-घञ्। ग्रहणार्थं प्रार्थनेऽनुरोधे च। तस्मिन्नुपच्छन्दयति प्रयोज्यमिति रघुः।

**उपजाति** स्त्री० वर्णवृत्ते छन्दोभेदे।

**उपजाप** पु० उप+जप-घञ्। भेदे, विच्छेदे, 'उपजापः कृतस्ते-ने'ति माघः। उपांशुजपे च।

**उपजिह्वा** स्त्री० उपगता ऊर्द्ध्वमुखी जिह्वा यस्याः। काकी भेदे। प्रा०स०। उपरिस्थायां जिह्वायाञ्च (आलजिभ्)।

**उपजीविका** स्त्री० उपजीवयति उप+जीव-करणे कर्तृत्वोप-चारात् ण्वुल् अत इत्त्वम्। जीवनोपायभूतायां वृत्तौ।

**उपजीविन्** त्रि॰ उप+जीव-णिनि । आश्रिते ।

**उपजीव्य** त्रि॰ उप+जीव-ण्यत् । आश्रये ।

**उपज्ञा** स्त्री॰उप+ज्ञा-कर्म्मणि अङ् । विनोपदेशेन स्वयमुद्भाव्ये प्रथमं ज्ञायमाने । भावे अङ् । आद्ये ज्ञाने । [उपायने

**उपढौकन** न॰ उप+ढौक-कर्म्मणि ल्युट् । (भेट) उपहारे

**उपत्यका** स्त्री॰ उप+त्यकन् । पर्व्वतस्यासन्नायां भूमौ ।

**उपदंश** पु॰ उप+दन्श-घञ् । मद्यपानरोचके (चाटनी) भक्ष्य द्रव्ये,भक्ष्यद्रव्योपकरणमात्रे, उपस्थरोगभेदे च ।

**उपदर्शक** पु॰उप+दृश-णिच्-ण्वुल् । द्वारपाले । दर्शयितरि त्रि॰

**उपदा** स्त्री॰ उप+दा-अङ् । उत्कोचे,उपढौकने च ।

**उपदेश** पु॰ उप+दिश-घञ् । मन्त्रादिकथने, अनुशासने, हितकथने,प्रवर्त्तकवाक्ये च ।

**उपद्रव** पु॰ उप+द्रु-अप् । उत्पाते शुभाशुभसूचके भूकम्पादौ, रोगजन्येऽन्यस्मिन् पिपासादाहादौ विकारे च ।

**उपद्रुत** त्रि॰ उप+द्रु-क्त । व्याकुले, प्राप्तोपद्रवे च ।

**उपधा** स्त्री॰ उप-धा-अङ् । 'धर्म्मार्थकाममोक्षैश्च प्रत्येकं परिशोधने । उपेत्य धीयते यस्मादुपधा तेन कीर्त्तिते'त्युक्ते धर्म्मार्थाद्युपन्यासेन मन्त्रिणां परीक्षणे, व्याकरणोक्ते, अन्त्यवर्णात् पूर्व्ववर्णे च ।

**उपधातु** पु॰ उपमितः धातुभिः । स्वर्णादिप्रधानधातुसदृशेषु 'सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम् । तुत्थं कांस्यञ्च रीतिश्च सिन्दूरञ्च शिलाजतु' इत्युक्तेषु सप्तसु द्रव्येषु, शरीरस्थेषु रसादिजन्येषु स्तनदुग्धादिषु च ।

**उपधान** न॰उपधीयते शिरोऽत्र । (बालिश) शिरोधाने,प्रणये, व्रतभेदे, विषे च । [प्रनक्तये कपटे,रथचक्रे च ।

**उपधि** पु॰उप+धा-कि । अन्यथास्थितस्य वस्तुनोऽन्यथा प्रका-

**उपधूपित** त्रि॰ उप+धूप-क्त । आसन्नमरणे, सन्तापयुते च ।

**उपधृति** स्त्री॰ उप+धृ-क्तिन् । किरणे ।

**उप(पा)ध्मानीय** पु॰उप पम ध्मायतेऽनेन उपध्मानमोष्ठस्तत्रोच्चार्य्यमाणः । पफयोः परयोः उच्चार्य्यमाणे विसर्गसदृशे वर्णभेदे तस्य व्यञ्जिका अर्द्ध विसर्गाकारा रेखा । उपाध्मानीयश्च

**उपनत** त्रि॰ उप+नम-क्त । उपस्थिते, प्राप्ते च ।

**उपनय** पु॰ उप+नी-अच् । उपनयने 'स्वद्योक्तकर्म्मणा येन समीपं नीयते गुरोः । बालो वेदाय तद्योगाद् बालस्योपनयं विदु'रिति स्मृत्युक्ते संस्कारविशेषे । न्यायमते यो यो धूमवान् स वह्निमान् अयमपि तथेत्यादिवाक्यरूपे न्यायावयवभेदे, ज्ञानलक्षणाजन्ये ज्ञानभेदे च ।

**उपनयन** न॰ उप+नी-ल्युट् । स्मृत्युक्ते संस्कारभेदे उपनयार्थे

**उपनाह** पु॰उप+नह-घञ् । वीणायां तन्त्रबन्धनस्थाने,व्रणाद्युपशमार्थं लेपनद्रव्ये च । [द्रव्ये ।

**उपनिधि** पु॰ उप+नि+धा-कि । न्यासे विश्वासेन स्थापिते

**उपनिषद्** स्त्री॰ उपनिषीदति प्राप्नोति ब्रह्मात्मभावोऽनया । उप+नि+षद-क्विप् । ब्रह्मविद्यायां, तत्प्रतिपादके वेदशिरोभागे वेदान्ते च । [वीथौ राजमार्गे ।

**उपनिष्कर** न॰उपनिष्किरन्ति सैन्यान्यत्र (उप-निस्-कृ+अप् ।

**उपनिष्क्रमण** न॰ उप+निस्-क्रम-ल्युट् । राजपथे ।

**उपनेत्र** न॰ उपगतं नेत्रम् । नेत्रसमीपे धृते काचादिनिर्म्मिते नेत्रोपकारके द्रव्ये (चसमा) ।

**उपन्यास** पु॰ उप+नि+अस-घञ् । वाक्योपक्रमे ।

**उपपति** पु॰ उपमितः पत्या । जारे ।

**उपपत्ति** स्त्री॰ उप+पद-क्तिन् । युक्तौ, सङ्गतौ च ।

**उपपद** न॰ उपोच्चारितं पदम् प्रा॰स॰ । समीपोच्चारिते नामोत्तरे उच्चारिते शर्म्मवर्म्मादिरूपे शब्दे, व्याकरणे प्रत्ययादिविधायकसूत्रे सप्तम्यन्तपदेन निर्द्दिश्यमाने पदे च । यथा कर्म्मण्यण् इत्यादौ कर्म्मणीतिसप्तम्यन्तं पदम् अणप्रत्ययविधाने उपपदम् । [रघुः ।

**उपपन्न** त्रि॰उप+पद-क्त । युक्तियुक्ते,'उपपन्नं ननु शिवमि'ति

**उपपातक** न॰ उपमितं पातकेन । गोवधादिरूपे पापे ।

**उपपादन** न॰ उप+पद+णिच्-ल्युट् । युक्त्या समर्थने सम्यक्प्रतिपादने च । [प्रतिपादिते च ।

**उपपादित** त्रि॰उप-पद+णिच्-क्त । युक्त्या समर्थिते, सम्यक्

**उपपुर** न॰ उप समीपे पुरम् । पुरसमीपे शाखानगरे ।

**उपपुराण** न॰ उपमितं पुराणेन । सर्गप्रतिसर्गाद्युक्तिरूपपुराणलक्षणयुक्तेषु सनत्कुमाराद्युक्तेषु अष्टादशसु ग्रन्थेषु ।

**उपप्लव** पु॰ उप+प्लु-अप् । गगनादुल्कापातादिरूपे उपद्रवे, चन्द्रार्कग्रहणे च ।

**उपप्लुत** त्रि॰उप+प्लु-क्त । पीड़िते,ग्रस्ते-चन्द्रेऽर्के च उपद्रुते च । 'उपप्लुतं पातुमद' इति माघः । [णोपकारके ।

**उपभूषण** न॰ उपभूष्यतेऽनेन ल्युट् । घण्टाचामरादौ भूष-

**उपभोग** पु॰ उप+भुज-घञ् । भोजनादिजन्ये सुखानुभवे भोगे

**उपमर्द्द** पु॰ उप+मृद-घञ् । आलोडने,हिंसने, पूर्व्वधर्म्मविनाशनेन धर्म्मान्तरोत्पादने च । [सा॰ १०प॰

**उपमा** स्त्री॰ उप+मा-अङ् । सादृश्ये, अर्थालङ्कारभेदे च ।

**उपमान** न॰ उपमीयतेऽनेन उप+मा-ल्युट् । सादृश्यज्ञानसाधने सादृश्यप्रतियोगिनि च, येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव सुखमित्यादौ चन्द्र उपमानम् । भावे ल्युट् । सादृश्यज्ञाने

**उपमिति** स्त्री० उप+मि-क्तिन् । सादृश्यज्ञाने उपमायाम् ।

**उपमेय** त्रि० उपमीयतेऽसौ उप+मि-यत् । सादृश्याश्रये यथा चन्द्र इव मुखमित्यादौ मुखम् ।

**उपमेयोपमा** स्त्री० अर्थालङ्कारभेदे साहि०१०प० ।

**उपयन्तृ** पु० उप+यम-तृच् । स्त्रियो विवाहकर्त्तरि पत्यौ ।

**उपयम** पु० उप+यम्-घञ् अवृद्धिः । विवाहे । वा वृद्धिः । उपयामश्चात्र । [वैवाहिके मन्त्रे ।

**उपयमन** न० उप+यम-ल्युट् । विवाहे । करणे ल्युट् ।

**उपयाचक** त्रि०उपगम्य याचकः याच-ण्वुल् । समीपे आगम्य याचञाकर्त्तरि । [देवाय देये पश्वादौ च ।

**उपयाचितक** न०उप+याच-क्त स्वार्थे कन् । प्रार्थिते. स्वेष्टसिद्धये

**उपयुक्त** त्रि० उप+युज-क्त । न्याय्ये. रचिते, भुक्ते च ।

**उपयोग** पु० उप+युज-घञ् । आचरणे भोजने, इष्टसिद्धिसाधने व्यापारे च । [साधनतायाम्, प्रयोजने च ।

**उपयोगिता** स्त्री० उपयोगिनो भावः तल् । आनुकूल्ये, इष्ट-

**उपयोगिन्** त्रि० उप+युज-घिणुन् । इष्टसाधने अनुकूले उपयुक्ते च । [स्नेहासक्ते, रञ्जनद्रव्येण रक्ते च ।

**उपरक्त** पु० उप+रन्ज-क्त । राहुग्रस्ते चन्द्रे सूर्य्ये च । व्य-

**उपरक्षण** न० उप+रक्ष-ल्युट् । रक्षार्थं सैन्यादिस्थापने ।

**उपरत** त्रि० उप+रम-क्त । विरते, निवृते, मृते, सर्व्वकामनाशून्ये च ।

**उपरतस्पृह** त्रि०उपरता निवृत्ता स्पृहा यस्य । सत्यपि जीवने स्वामित्वे, विषयभोगादौ च अत्यन्तनिवृत्ताभिलाषे । 'पितर्य्युपरतस्पृहे' इति स्मृतिः ।

**उपरति** स्त्री०उप+रम-क्तिन् । विरतौ, लभ्यप्राप्तावौदासीन्ये, विषयेभ्य इन्द्रियाणां निवारणे, विहितकर्म्मणाम् विधानतस्त्यागरूपे सन्यासे "पुमर्थः कर्म्मणा नेति धीर्य्या सोपपरतिर्भवेदित्युक्तरूपायां बुद्धौ च ।

**उपरत्न** न० उपमितं रत्नेन गति० । मणिसदृशेषु 'उपरत्नानि काचश्च कर्पूरोऽश्मा तथैव च । मुक्ताशुक्तिस्तथा शङ्ख इत्युक्तकाचादिषु । [च 'फेनोपरमे दद्यादि'ति वैद्यकम् ।

**उपरम** पु० उप+रम-घञ् अवृद्धिः विषयवैराग्ये, निवृत्तौ ।

**उपराग** पु० उप+रन्ज-घञ् । रविचन्द्रयोर्ग्रहणे । ग्रहणञ्च राह्वधिष्ठितभूमिच्छायया चन्द्रस्य, चन्द्रमण्डलेन च रवेर्मण्डलाच्छादनमिति सिद्धान्ते स्थितम् ।

**उपरि** अव्य० ऊर्द्ध्व+रिल् उपादेशश्च । प्रथमापञ्चमीसप्तम्यन्तार्थवृत्तेः ऊर्द्ध्वशब्दस्यार्थे ।

**उपरिष्टात्** अव्य० ऊर्द्ध-रिष्टाति उपादेशश्च । उपरिशब्दस्यार्थे

**उपरोध** पु० उप+रुध-घञ् । आनुकूल्याय कथनरूपेऽनुरोधे, समीपे रोधने च । [त्रि० ।

**उपरोधक** न० उप+रुध-ण्वुल् । वासगृहे । अनुरोधकर्त्तरि

**उपल** पु०उपनीयते उपस्तीर्य्यते गिरिरनेन नी-ड नस्य लत्वम् । प्रस्तरे । अर्श आदित्वादच् । पाषाणचितायां मृदि स्त्री० ।

**उपलक्षण** समीपस्थस्य स्वसंबन्धिनश्च लक्षणं ज्ञानं यस्मात् । स्वस्य स्वान्यस्य च अजहत्स्वार्थया लक्षणया बोधके शब्दे यथा काकेभ्योदधि रक्ष्यतामित्यत्र काकपदं स्वस्य स्वान्यादेः श्वादेश्च बोधकम् । [उपलब्धेरिति' वेदान्तसूत्रम्

**उपलब्धि** स्त्री० उप+लभ-क्तिन् । ज्ञाने, प्राप्तौ च । 'नाभाव

**उपलम्भ** पु० उप+लभ-घञ् मुम् च । लाभे, ज्ञाने च ।

**उपलिङ्ग** न० उपमितं लिङ्गेन । लोकसिद्धसाधनभावेन लिङ्गेनानुमापकेन सदृशे अलौकिकसाधनभावके अरिष्टसूचके भूकम्पादौ उपद्रवे ।

**उपवट** पु० उपमितो वटेन । वटवृक्षसदृशे प्रियासालवृक्षे ।

**उपवन** न० उपमितं वनेन । वनतुल्ये कृत्रिमे आरोपितवृक्षसमूहे उद्याने । [वर्हणमप्यत्र न० ।

**उपवर्ह** पु० उप+वृह-घञ् । शिरोधाने (वालिश) ल्युट् । उप-

**उपवसथ** पु० उप+वस-अथ । ग्रामे ।

**उपवास** पु० उप+वस-घञ् । "तपनोदयमारभ्य यामाष्टकमभोजनम् । उपवास इति ख्यात" इति स्मृत्युक्ते अनाहारे ।

**उपवाह्य** पु० उप+वह-ण्यत् । राजवाहके ।

**उपविष** पु० उपमितं विषेन । 'अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका । धस्तूरः करवीरश्च पञ्च चोपविषाः स्मृता इत्युक्तेष्वर्कक्षीरादिषु ।

**उपवीत** न० उप+अज-क्त-वीभावः । वह्निर्भूतदक्षिणहस्ततया वामांशस्थापिते कार्पासे यज्ञसूत्रे ।

**उपवीतिन्** त्रि० उपवीतं विद्यतेऽस्य । यज्ञोपवीतवति ।

**उपवृंहित** त्रि० उप+वृन्ह्-क्त । वर्द्धिते ।

**उपवेद** पु० उपमितः वेदेन । वेदसदृशे आयुर्वेदादौ ।

**उपव्याघ्र** पु० उपमितो व्याघ्रेण । व्याघ्रतुल्ये मृगान्तके (चितावाघ) चित्रकाख्ये पशुभेदे ।

**उपशम** पु० उप+शम-घञ् अवृद्धिः । इन्द्रियाणां निग्रहे, तृष्णानाशे, रोगप्रतीकारे, शान्तौ च ।

**उपशय** पु० उप+शी-अच् । समीपशयने, 'औषधान्नविहाराणामुपयोगं सुखावहम् । विद्यादुपशयं व्याधेरिति वैद्यकोक्ते उपयोगभेदे च ।

**उपशल्य** न०उपगतं शल्यम् अस्थिस्थानं (भागाड़) । ग्रामान्ते

उपशाय पु॰उप+शी-घञ् । यामिकभटानां पर्य्यायेण शयने ।
उपश्रुति स्त्री॰ उप+श्रु-क्तिन् । अङ्गीकारे देवशुभाशुभप्रश्ने च ।
उपश्लेष पु॰ उप ईषत् एकदेशेन श्लेषः संबन्धः । आधाराधेययोरेकदेशसंबन्धे । यथा गृहघटयोः । [रिणि त्रि॰
उपष्टम्भक न॰ उप+स्तन्भ-ण्वुल् । स्थूणायाम् । स्तम्भका-
उपसंग्रह पु॰ उप+सम्+ग्रह-अप् । पादस्पर्शपूर्व्वकनमस्कारे
उपसंयम पु॰ उप+सम्+यम-घञ् अवृद्धिः । उपसंहारे ।
उपसंव्यान न॰ उपसंवीयतेऽनेन व्येञ्-ल्युट् । परिधानवस्त्रे ।
उपसंहार पु॰ उप+सम्+हृ-घञ् । समाप्तौ,संग्रहे च ।
उपसत्ति स्त्री॰उप+सद-क्तिन् । सेवायां,सङ्गमात्रे,प्रतिपादने च
उपसन्न त्रि॰उप+सद-क्त । उपस्थिते, निकटागते च ।
उपसम्पन्न त्रि॰उप+सम्+पद-क्त । यज्ञार्थहते प्रोक्षिते पशौ, पाकेन संस्कृते मांसादौ,पर्य्याप्ते, मृते च । [धानायोपगमे ।
उपसर पु॰ उप+सृ-अप् । स्त्रीगव्यादिषु पुंगवादीनां गर्भा
उपसर्ग पु॰उप+सृज-घञ् । रोगविकारे उपद्रवे, शुभाशुभसूचके महाभूतविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयोज्ञेयाः प्रादयस्तूपसर्गकाः । द्योतकत्वात् क्रियायोगे लोकादवगताइमे' इत्युक्तलक्षणेषु क्रियायोगे प्रादिषु च
उपसर्ज्जन न॰ उप+सृज-ल्युट् । अमुख्ये गौणे, विशेषणे, व्याकरणोक्ते समासशास्त्रे प्रथमान्तनिर्द्दिष्टे च ।
उपसर्य्या स्त्री॰उपस्रियतेऽसौ सृ-यत् । गर्भग्रहणयोग्यायाम् ऋतुमत्यां गवि । [कन् । चन्द्रार्कसमीपे मण्डलाकारे परिधौ
उपसूर्य्यक न॰ उपगतं सूर्य्यं सूर्य्यमिव चन्द्रं वा संज्ञायां
उपसूर्य्यकमण्डल न॰ उपसूर्य्यकं मण्डलं वेष्टनम् कर्म्म॰ । चन्द्रार्कवेष्टने परिधौ । [युक्ते, विसृष्टे च त्रि॰ ।
उपसृष्ट न॰ उप+सृज-क्त । मैथुने । व्याकरणोक्ते प्राद्युपसर्ग-
उपसेक पु॰ उप+सिच+घञ् । सेचनेन मृदूकरणे ।
उपस्कर पु॰ उप+कृ-अप् सुट् च । व्यञ्जनादिसंस्कारके पिष्टधन्याकहरिद्रादौ (बाटना) गृहोपकरणे उपदुदूखलादौ च
उपस्थातृ त्रि॰उप+स्था-तृच् । सेवके, उपगते, ऋत्विग्भेदे च ।
उपस्थान न॰ उप+स्था-ल्युट् । उपेत्य स्थितौ,नमस्कारे च
उपस्थित त्रि॰ उप+स्था-क्त । समीपस्थिते, प्राप्ते, आगते च
उपस्पर्श पु॰ उप+स्पृश-घञ् । स्पर्शे, स्नाने च । उपस्पृश्यन्ते इन्द्रियाण्यत्र । विधिना जलपानपूर्व्वके मुखादिस्पर्शरूपे वैधाचमने । तथेत्युपस्पृश्येति रघुः ।
उपस्पृष्ट त्रि॰ उप+स्पृश-क्त । आचान्ते कृताचमने, समीपे आसनादौ स्पृष्टे च । [हारसमीपे अव्य॰ ।
उपहार पु॰ उप+हृ-घञ् । (भेट) उपढौकये । अव्ययी॰ ।

उपह्वर पु॰ उप+ह्वृ-अप् । युद्धे । निर्ज्जने निकटे च न॰ ।
उपांशु अव्य॰ उप+अन्शु-उ । निर्ज्जने अप्रकाशे च । 'जिह्वोष्ठौ चालयेत् किञ्चित् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृत इत्युक्तलक्षणे मन्त्रादेर्जपे पु॰ । 'उपांशुः स्याच्छतगुण इति मनुः ।
उपाकरण न॰ उप+आ+कृ-ल्युट् । उपनयनपूर्व्वकं वेदस्य ग्रहणे, श्रावण्यां पूर्णिमायां कर्त्तव्ये वैधकर्म्मविशेषे, संस्कारपूर्व्वकं यज्ञे पशूनां हनने, आरम्भे च ।
उपाकर्म्म न॰ उप+कृ-मनिन् । उपाकरणस्यार्थे ।
उपाकृत त्रि॰ उप+आ+कृ-क्त । यज्ञे हननार्थं कृतसंस्कारे पशौ, आरम्भे च ।
उपाख्यान न॰ उप+आ+ख्या-ल्युट् । पूर्व्ववृत्तकथने, 'रामोपाख्यानमत्रैवे'ति महाभारतम् । कथनमात्रे च । [गमने च ।
उपागम पु॰ उप+आ+गम-घञ् अवृद्धिः । स्वीकारे,समीपा-
उपाङ्ग न॰ उपमितमङ्गेन गति॰ । अङ्गसदृशे प्रधानोपयोगिनि 'साङ्गोपाङ्गैरिहोदिता' इत्यमरः ।
उपाजे अव्य॰ उप+अज-के वीभावाभावः । दुर्बलस्य बलाधाने
उपात्त त्रि॰ उप+आ+दा-क्त । गृहीते, प्राप्ते च 'वयं केचिदुपात्तस्येति श्रुतिः । अन्तर्गतमदे गजे पु॰ ।
उपात्यय पु॰ उप+अति+इण्-अच् । लोकशास्त्राचारातिक्रमे, व्यतिक्रमे,क्रमोल्लङ्घने, नाशे च ।
उपादान न॰ उप+आ+दा-ल्युट् । ग्रहणे, स्वस्वविषयेभ्य इन्द्रियाणां निवारणरूपे प्रत्याहारे, कार्य्यजननार्थमुपादीयमाने कार्य्यान्विते कारणे, यथा मृदादि घटादेः, स्वर्णादि अलङ्कारादेः, जननार्थं गृह्यते । तच्च सर्व्वदा कार्य्येष्वनुगतम्
उपादेय त्रि॰ उप+आ+दा-यत् । उत्कृष्टे, ग्राह्ये, प्रधाने, विधेये च उपादेये गुणो भवेदिति भट्टकारिका ।
उपाधि पु॰ उप+आ+धाञ्-कि । धर्म्मचिन्तायाम्, विशेषणे उपाधिर्भिद्यते न तु तद्वानितिसांख्यसूत्रम् । स्वधर्म्मस्यान्यगततयावभासके, यथा दर्पणादि स्वगतं नीलिमादिकं स्वप्रतिबिम्बितमुखगततया, जवापुष्पं च स्वगतं रक्तत्वं स्फटिकगतयाऽवभासयति अतोऽत्र दर्पणादि नीलिमाद्यवभासने उपाधिः । न्यायमते हेतुव्यभिचारोन्नावके साध्यव्यापके साधनाव्यापके पदार्थे च ।
उपाध्याय पु॰ उपेत्याधीयतेऽस्मात् उप+अधि+इङ्-घञ् । 'एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः । 'योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते' इति मनूक्तलक्षणे वेदैकदेशतदङ्गाध्यापके । स्त्रियां ङीपि उपाध्याया उपाध्यायीतिरूप-

ह्यम् । उपाध्यायस्य पत्नीत्यर्थे ङीष् आनुक् वा उपाध्यायानी उपाध्यायी च । [कायाम् ।

**उपानह्** स्त्री॰ उप+आ-नह्-क्विप् उपसर्गदीर्घः । चर्म्मपादु-

**उपान्त** पु॰ उपमितमन्तेन प्रा॰स॰ । निकटे, प्रान्ते च ।

**उपान्त्य** त्रि॰ उपान्ते भवः यत् । अन्तासमीपभवे ।

**उपाय** पु॰ उप+अय+घञ् । साधने, उपगमे, राज्ञां रिपुनिराकरणहेतुषु सामादिषु च । [गमने च ।

**उपायन** न॰ उप+अय-ल्युट् । तोषकारके उपहारे, समीप-

**उपारत** त्रि॰ उप+आ+रम-क्त । निवृत्ते 'उपारताः पश्चिमरात्रगोचरादि'ति भारविः ।

**उपालम्भ** पु॰ उप+आ+लभ-घञ् मुम् च । निन्दापूर्व्वकदुष्टवचने, परस्परदूषणे च ।

**उपावृत्त** त्रि॰ उप+आ+वृत-क्त । श्रमापनयनाय पुनःपुनर्भूमिलुठितेऽश्वे, प्रतिनिवृत्ते च । [त्रि॰ ।

**उपासक** त्रि॰ उप+अस-ण्वुल् । उपासनकर्त्तरि, सेवके च

**उपासङ्ग** पु॰ उपासज्यन्ते शरा अत्र । उप+आ+सञ्ज-घञ् । तूणे । [सेवने । युच् । देवताद्याराधने स्त्री॰ ।

**उपासन** न॰ उप+अस-क्षेपे ल्युट् । शराभ्यासे । आस+ल्युट्

**उपासित** त्रि॰उप+आस-क्त । सेविते, कृतोपासने देवादौ च ।

**उपास्ति** स्त्री॰ उप+आस-क्तिन् । उपासनायाम् 'यदुपास्तिमसावत्रेति' कुसुमाञ्जलिः ।

**उपाहित** पु॰ उप आसन्नमहितं यतः । उल्कापातादौ अग्न्युत्पातरूपे उपद्रवे । उप+आ+धा-क्त । आरोपिते, योजिते च त्रि॰

**उपेक्षक** त्रि॰ उप+ईक्ष-ण्वुल् । विवादिनोर्जयपराजयासंस्पृष्टे, तत्कृतहर्षविषादशून्ये, उदासीने, प्रतीकारानुद्यते च

**उपेक्षा** स्त्री॰ उप+ईक्ष-अ । त्यागे "इदं न मम स्यादिती"-च्छाभेदे, औदासीन्ये, अनपेक्षणे च ।

**उपेन्द्र** पु॰ उपगत इन्द्रम् अनुजत्वात् । विष्णौ । स हि कश्यपात् अदितौ इन्द्रादपरं वामनरूपतया संजातः ।

**उपेन्द्रवज्रा** स्त्री॰ एकादशाक्षरपादके छन्दोभेदे ।

**उपेय** त्रि॰ उप+इण्-यत् । उपायसाध्ये, प्राप्तव्ये च ।

**उपोढ** त्रि॰ उप+वह-क्त । सन्निवेशविशेषयुक्ते व्यूढे सैन्ये निकटे, ऊढे कृतविवाहे च ।

**उपोत्तम** त्रि॰ उपगतमुत्तममन्त्यम् । अन्तासमीपे उपान्त्ये ।

**उपोदकी** स्त्री॰ उपगतमुदकमत्र । पूतिकायाम् (पुइशाक ।

**उपोद्घात** पु॰ उप+उद्+हन-घञ् । प्रकृतोपपादके उदाहरणे प्रकृतार्थं वर्णयितुमर्थान्तरवर्णने, "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा" इत्युक्तलक्षणायां चिन्तायाञ्च ।

**उपोषण** न॰ उप+उष-ल्युट् । उपवासे अहोरात्राभोजने ।

**उपोषित** न॰ उप+वस+भावे-क्त । उपवासे । कर्त्तरि क्त । उपवासकर्त्तरि त्रि॰ । [धान्यादौ क्षेत्रे ।

**उप्त** त्रि॰ वप-क्त । कृतवापे धान्यादौ । अधिकरणे क्त । उप्त-

**उप्तकृष्ट** त्रि॰ पूर्व्वमुप्तं पश्चात् कृष्टं पूर्व्वकालेत्यादि स॰ । वीजवपनानन्तरं कृष्टे क्षेत्रे (वीजाकृते क्षेत्रे) । (काडान) ।

**उब्ज** आर्जवे तुदा॰ पर॰ अक॰ सेट् । उब्जति औब्जीत् ।

**उभ** त्रि॰ द्वित्व॰ । उ-भक् । द्वित्वविशिष्टार्थे । अस्य समासादिवृत्तौ प्रयोगो नास्ति । [ऽर्थे ।

**उभय** त्रि॰ उभौ अवयवौ यस्य उभ+अयट् । द्वित्वविशिष्टे-

**उभयतस्** अव्य॰ उभ-तसिल् वृत्तौ अयः । उभयपार्श्वे ।

**उभयथा** अव्य॰ उभ+थाच् । वृत्तौ अयः । उभयप्रकारेणेत्यर्थे

**उभयद्युस्** अव्य॰ उभ-द्युस् वृत्तौ अयः । उभयदिनयोः । एद्युस् । उभयेद्युरप्यत्र ।

**उम्** अव्य॰ उ-डुम् । रोषे, स्वीकारे, प्रश्ने च ।

**उमा** स्त्री॰ ओः शिवस्य मा लक्ष्मीः । दुर्गायाम् 'उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगामे'तिनिरुक्तायां पार्व्वत्याम् । उं शिवं माति पतित्वेन मन्यते मा+क । शिवपत्न्याम् । वे-मक संप्रसारणम् । हरिद्रायाम् अतसीवृक्षे (मसिना) कीर्त्तौ, कान्तौ, शान्तौ च ।

**उमाकट** पु॰ उमाया अतस्या हरिद्राया वा रजः कटच् । अतस्या हरिद्रायाश्च रजसि । [मेशादयोऽप्यत्र ।

**उमाधव** पु॰ उमाया धवः पतिः ६त॰ । महादेवे । उमाकान्तो-

**उमासुत** पु॰ ६त॰ । कार्त्तिकेये । उमापुत्रादयोऽप्यत्र ।

**उम्भ** पूर्त्तौ तुदा॰ पर॰सक॰ सेट् । उम्भति औम्भीत् ।

**उर** गतौ (सौत्रः) पर॰ सक॰ सेट् । ओरति औरीत् ।

**उरग** पु॰ उरसा गच्छति उरस्+गम-ड सलोपश्च । सर्पे, तद्देवताके अश्लेषानक्षत्रे च ।

**उरगाशन** पु॰ उरगानश्नाति उरग+अश-ल्यु उप॰ स॰ । गरुडे । ल्युट् । उरगाशनम् सीसके न॰ ।

**उरण** पु॰ ऋ॰ क्यु, धातोरुच्च । मेषे । [(दादमर्द्दन) वृक्षे ।

**उरणाक्ष** पु॰ उरणस्य मेषस्य अक्षीव अक्षि पुष्पं यस्य । दद्रुघ्ने

**उरभ्र** पु॰ उरु उत्कट भ्रमनि भ्रम-ड पृषो॰उलोपः । मेषे ।

**उररी** अव्य॰ वे-ररीक् । अङ्गीकारे, विस्तारे च ।

**उररीकृत** त्रि॰ उररी+कृ-क्त । अङ्गीकृते, विस्तृते च ।

**उरश्छद** पु॰ उरश्छाद्यतेऽनेन छद-णिच्-घ ह्रस्वः । कवचे ।

**उरस्** न॰ ऋ-असुन् धातोरुच्च । वक्षःस्थले ।

**उरसिज** पु॰ उरसि जायते जन-ड त॰ सप्तम्या अलुक् ।

क्लीवबीजाते स्तने । [प्रशस्तवक्षोयुते ।
उरसिल त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मत्वर्थीय इलच् ।
उरस्कट पु० उरः कथ्यते आव्रियतेऽनेन कट-घञर्थे क । बालानामुत्तरीयभेदे तद्वीवे यज्ञोपवीताकारे वस्त्रभेदे च । (बुकवाकाड़) । [उरस्त्राणमप्यत्र न० ।
उरस्त्र न० उरस्त्रायते त्रै-क । वक्षोरक्षके कवचे । ल्युट् ।
उरस्य पु०उरसा निर्मितः उरस्+यत् । स्वजाते औरसे पुत्रे
उरस्वत् त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः । प्रशस्तवक्षोयुते ।
उरी अव्य० वेञ्-रीक् । अङ्गीकारे, विस्तारे च ।
उरीकार पु० उरी+कृ-घञ् । स्वीकारे, विस्तारे च ।
उरीकृत त्रि०उरी+कृ-क्त । अङ्गीकृते, विस्तृते च । [वा ङीप्
उरु त्रि०ऊर्णु-कु नुलोपो ह्रस्वश्च । विशाले, महति च स्त्रियां
उरुक्रम पु० उरुर्महान् क्रमः पादविक्षेपो वा यस्य । विष्णौ
उरुवूक पु० उरु-वै-ऊक आलोपश्च । एरण्डवृक्षे रक्तैरण्डे च
उरोज पु०उरस् जन-ड त०। स्त्रीस्तने । [(माकडसा) मर्कटके
उर्णनाभ पु० ऊर्णेव सूत्रं नाभौ गर्भेऽस्य अच् समा०ह्रस्वः ।
उर्णा स्त्री०ऊर्णूयते आच्छाद्यते ऊर्णु-ड ह्रस्वश्च । मेषादिलोम्नि
उर्द माने स्वादे च सक० क्रीडायाम् अक०भ्वा०आत्म०सेट् । उर्दते
उर्द्र पु० उर्द-रक् । जलविड़ाले (उद्बिराल)
उर्व हिंसायां भ्वा०पर०सक०सेट् । उर्वति और्वीत् ।
उर्वरा स्त्री० उरु-ऋ-अच् । सर्वशस्ययुक्तायां भूमौ ।
उर्वशी स्त्री० उरून् अश्नुते वशीकरोति उरु+अश-क गौरा० ङीष् । स्वर्गवेश्यायाम् ।
उर्वशीरमण पु० ६त०। चन्द्रवंश्ये बुधपुत्रे पुरूरवोनामके राज्ञि
उर्वारु पु० उरु-ऋ-उण् । कर्कट्याम् । स्वार्थे कन् अत्रैव ।
उर्वी स्त्री० उरु+स्त्रियां गुणवचनत्वात् ङीष् । भूमौ ।
उल दाने (चौरा०) पर०सक०सेट् । ओलति औलीत् ।
उलप पु० न० वल-कपच् संप्रसारणम् । शाखापत्रप्रचययुतायां लतायाम् । कोमले तृणभेदे न० (उलुखड़) ।
उलूक पु० वल-संवरणे ऊक संप्रसारणम् । पेचके, इन्द्रे, दुर्य्योधनमातुलशकुनिपुत्रे च । तृणभेदे न० । (उलुखड़)
उलूखल न० ऊर्द्ध्वं खम् उलूखं पृषो० तत् लाति गृह्णाति ला-क । धान्यादिकखण्डनसाधने काष्ठमये पात्रे (उखरी) गुग्गुलौ च । [शिशुके, (शोशक) मत्स्यभेदे च
उलूपिन् पु०ऊरोः शम्भोरिव रूपमस्यास्ति इनि रस्य लत्वम् ।
उलूलु पु०उरु उरु इति रस्य लत्वम्। हर्षसूचके माङ्गल्यादौ स्त्रीध्वनिभेदे 'उच्चैरुलूलुध्वनिरुच्चचारे'ति नैषधम् ।

उल्का स्त्री० उष-दाहे क नि०षस्य लः । रेखाकारे गगनात् पतत्तेजःपुञ्जे । (भेदे (ख्याकशियाली)
उल्कामुखी स्त्री०उल्केव रात्रौ ज्वलत् मुखं यस्याः। शृगाली
उल्मुक न० उष-दाहे मुक, षस्य लः । अङ्गारे ।
उल्लल त्रि० उद्‌लल-अच् । बहुरोमयुक्ते ।
उल्ललित त्रि० उद्‌लल-क्त । तरलिते, आन्दोलिते च । [पु०
उल्लाघ त्रि०उद्+लाघ-क्त नि०। रोगनिर्मुक्ते,दक्षे,शुचौ,च । मरिचे
उल्लाप पु० उद्+लप-घञ् । काकुवाक्ये, शोकरोगादिना ध्वनेर्विकारे च । [स्थानीये परिच्छेदे च
उल्लास पु० उद्+लस+घञ् । प्रकाशे, आह्लादे, ग्रन्थस्याध्याय
उल्लिखित त्रि० उद्+लिख-क्त । उत्कीर्णे तनूकृते उपरि लिखिते, चित्रिते च ।
उल्लेख पु०उद्+लिख-घञ् । उच्चारणे,अलङ्कारभेदे सा०द०१०प
उल्लेखन न० उद्+लिख-ल्युट् । वमने, खनने, उच्चारणे च
उल्लोच पु० उद्+लोच-घञ् । चन्द्रातपे विताने ।
उल्लोल पु० उद्+लोड़-घञ् डस्य लत्वम् । महातरङ्गे ।
उल्व न० वल-वक् संप्रसारणञ्च । गर्भवेष्टनचर्म्मणि जरायौ ।
उल्वण त्रि० उद्+वण-अच् पृषो० दस्य लः । व्यक्ते, स्पष्टे ।
उ(ष)शती स्त्री० उश-शतृ, वश-शतृ संप्रसारणम् वा । स्त्रियां ङीप् । अकल्याणायां वाचि ।
उशनस् पु० वश-कनसि । भार्गवे शुक्रे । सौ उशना संबुद्धौ उशनन् उशन, उशनः ।
उशीर पु० न० वश-ईरन् किच्च । (खश खश्) वीरणमूले ।
उष वधे, दाहे च भ्वादि०पर०सक०सेट् । ओषति,औषीत् ।
उष वधे दाहे च भ्वादि०पर०सक०वेट् । ओषति औषीत्,औक्षीत्
उष पु०उष-क दिने गुग्गुलौ, रात्रिशेषे, घारन्तिकायां च कामनायुक्ते त्रि० । [च (चड्ड) ।
उषण न० उष-क्युन् । मरिचे । पिप्पल्यां, शुण्ठ्यां चव्यके
उषर्बुध पु० उषसि संध्यायां बुध्यते होमार्थं प्रज्वालने प्रकाशते उषस्+बुध-क अहरादित्वात् रः । अग्नौ, रक्तचित्रके च ।
उषस् न०उष-असि किच्च । प्रत्यूषे, पञ्चपञ्चाशद्घटिकोत्तरकाले
उषसी स्त्री०उषं तापकत्वात् दिवसं स्यति उष+सो-क गौरा० ङीष् । सायं सन्ध्यायाम् ।
उषा स्त्री०उष-क टाप् । "तेजःपरिहानिमुषा भानोरर्द्धोदयं यावदि"ति वराहोक्ते काले वाणराजसुतायाञ्च ।
उषाकल पु० उषायां कलः शब्दोऽस्य । कुक्कुटे ।
उषापति पु० उषाया वाणराजसुतायाः पतिः । अनिरुद्धे कन्दर्पात्मजे कृष्णपौत्रे । उषाकान्तादयोऽप्यत्र ।

**उषित** त्रि॰ उष-क्त । पर्य्युषिते दग्धे च । वस-क्त । स्थिते ।
**उष्ट्र** पु॰उष-ष्ट्रन् कित्त् । स्वनामख्याते पशुभेदे, वाह्यरथे च ।
**उष्ण** पु॰उष-नक् । ग्रीष्मे ऋतौ, आतपे, पलाण्डौ नरकभेदे, शीतभिन्ने स्पर्शे च । तद्वति, आलस्यरहिते दक्षे च त्रि॰।
**उष्णक** त्रि॰ उष्णमिव करोति कन् । अनलसे, चिप्रकारिणि च उष्णं करोति उष्ण+णिच् । ण्वुल् ज्वरे पु॰ ।
**उष्णगु** पु॰ उष्णा गावः किरणा अस्य । सूर्य्ये । उष्णरश्मिरप्यत्र
**उष्णनदी** स्त्री॰ कर्म॰ "यमद्वारे महाघोरे तप्ता वैतरणी नदी'त्युक्तायाम् उष्णनद्यां वैतरण्याम् ।
**उष्णवारण** न॰ उष्णं वारयति वृ-णिच्-ल्यु । आतपत्रे, छत्रे
**उष्णवीर्य्य** पु॰ उष्णरूपं वीर्य्यमस्य । शिशुमाराख्ये जलजन्तौ। उष्णवीर्य्यवति त्रि॰ ।
**उष्णांशु** पु॰ उष्णा अंशवो यस्य । सूर्य्ये ।
**उष्णागम** पु॰ उष्णस्यागमोऽत्रिन् । निदाघकाले ।
**उष्णासह** पु॰ उष्णं आसह्यतेऽत्र आ+सह-अच् । हेमन्ते ऋतौ । उष्णं न सहते अच् । असह्यष्णे त्रि॰ ।
**उष्णिका** स्त्री॰अल्पमन्नमस्याम् अल्पार्थे कन् नि॰ अन्नस्य उष्णादेशः। यवाग्वाम् (याउ)। उष्णकशब्दात् टाप् । दयायाम्
**उष्णिह्** स्त्री॰ उत्स्निह्यति क्विन् नि॰ षत्वम् । सप्ताक्षरपादके छन्दोभेदे । स्वादौ उष्णिक् उष्णिग्भ्याम् ।
**उष्णीष** पु॰ न॰ उष्णमीषते हिनस्ति ईष-क शक॰ पररूपम् । शिरोवेष्टनवस्त्रे, (पागडी) किरीटे च ।
**उष्णोपगम** पु॰ उष्णस्य उपगमोऽत्र । निदाघकाले ।
**उष्म** पु॰ उष-मक् । निदाघे, आतपे, ग्रीष्मे ऋतौ च ।
**उष्मपा** पु॰ उष्मं पिबन्ति पा-क्विप् । भृगोः पुत्रे पितृगणभेदे।
**उस्र** पु॰ वसन्ति रसा अत्र वस-रक् । किरणे, सूर्य्यकिरणानां जलहेतुत्वात् रसवत्त्वम् । वृषे च! सुरभ्यां उपचित्रा लतायां च स्त्री॰ । [उवोह जहतुः
**उह** बधे भ्वादि॰पर॰सक॰सेट् । ओहति औहत्, औहीत्,
**उह** अव्य॰ उ च ह च द्व॰ । संबोधने, एवार्थे च ।
**उहह** अव्य॰ उह च ह च । सम्बोधने । [कर्म्मणि च ।
**उह्यमान** त्रि॰ वह-कर्म्मणि शानच् । आकृष्यमाणे, वहन-

## ऊ

**ऊ** अव्य॰ वेञ् क्विप् । संबोधने, वाक्यारम्भे, दयायां, रक्षायाञ्च
**ऊ** पु॰अवतीति अव-क्विप् ऊठ्। महादेवे चन्द्रे च। पालके त्रि॰
**ऊत** त्रि॰ ऊय-तन्तुसन्ताने क्त । स्यूते, स्रलेया ग्रथिते च ।
**ऊति** स्त्री॰ ऊय-क्तिन् । स्यूतौ । अव-क्तिन् नि॰ । रक्षणे, लीलायां, चरणे च । [क्षीराधारे आपीने (मेड़)
**ऊधस्** न॰ उन्द-असुन् निपा॰ उतोदीर्घः । स्त्रीगव्यादेः
**ऊधस्य** न॰ ऊधसि भवम् ऊधस्+यत् । दुग्धे ।
**ऊन** परिहाणे अदन्तचुरा॰ उभ॰ अक॰ सेट् । ऊनयति ते औनिन-त् त औनयीत् औनयिष्ट ।
**ऊन** त्रि॰ ऊन-हानौ अच् । हीने, असंपूर्णे च ।
**ऊम्** अव्य॰ ऊय-मुक् । रोषोक्तौ, प्रश्ने, निन्दायां, स्पर्द्धायाञ्च
**ऊय** तन्तुसन्ताने भ्वा॰ आत्म॰सक॰सेट् । ऊयते औयिष्ट ।
**ऊररी** अव्य॰ ऊय-ररीक् । अङ्गीकारे, विस्तारे च ।
**ऊरव्य** पु॰ ऊरु+भवार्थे यत् । वैश्ये । तस्य ब्रह्मण ऊरुतो जन्म 'ऊरू वैश्य' इति श्रुतेः प्रसिद्धम् । ऊरुसम्भवे त्रि॰।
**ऊरी** अव्य॰ ऊय-रीक् । अङ्गीकारे, विस्तारे च ।
**ऊरु** पु॰ ऊर्णूयते आच्छाद्यते ऊर्णु-कर्म्मणि कु नुलोपश्च । जानूपरिभागे ।
**ऊरुज** पु॰ ऊरोर्ब्रह्मण ऊरोर्जायते जन-ड । वैश्ये ।
**ऊरुपर्व्वन्** पु॰ ऊरोः पर्वेव । जानुनि (हांटु)
**ऊरुस्तम्भ** पु॰ ऊरुं स्तभ्नाति अण् । स्वनामख्याते रोगे ।
**ऊरुस्तम्भा** स्त्री॰ऊरोरुपमानभूतः स्तम्भो यस्याः। कदलीवृत्ते ।
**ऊर्ज्ज** जीवने बले च चु॰ उभ॰ अक॰ सेट् । ऊर्ज्जयति, ते और्ज्जिजत् त ।
**ऊर्ज्ज** पु॰ऊर्ज्ज-आधारे घञ् । कार्त्तिके मासि । भावे घञ् । बले, उत्साहे च । अहनि सान्तोऽप्ययमत्रार्थे ।
**ऊर्ज्जस्वल** त्रि॰ ऊर्ज्जस्+अस्त्यर्थे वलच् । बलवति । विनि । ऊर्ज्जस्वीत्यप्यत्र ।
**ऊर्ज्जित** त्रि॰ ऊर्ज्ज-क्त । बलातिशययुक्ते, वृद्धियुक्ते च ।
**ऊर्णनाभ** पु॰ ऊर्णेव तन्तुर्नाभावस्य अच् समा॰ ह्रस्वः । मर्कटे (माकडसा) अजभावे ऊर्णनाभिरप्यत्र भ्रुवोर्मध्यस्थे महापुरुषचिह्ने आवर्त्ताकारे लोमसङ्घये च ।
**ऊर्णा** स्त्री॰ ऊर्णु-करणे ड । मेषलोमनि ।
**ऊर्णायु** पु॰ ऊर्णाः सन्त्यस्य युच् । मेषे, कम्बले, ऊर्णनाभे, चणभङ्गुरे च ।
**ऊर्णु** आच्छादने अदा॰ उभ॰ सक॰ सेट् । ऊर्णोति, ऊर्णुते, और्णावीत् और्णुवीत् और्णवीत् और्णविष्ट और्णविष्ट ।
**ऊर्द्ध** त्रि॰ उद् हाङ्-ड पृषो॰ ऊरादेशः । उच्चे उपरि च
**ऊर्द्धक** पु॰ ऊर्द्धः सन् कायति शब्दायते । मृदङ्गभेदे स च गोपुच्छवदाकारस्त्रितालपरिमितः मुखेऽष्टाङ्गुलः ऊर्द्धं धृत्वा वाद्यते । [तुङ्गे उपरि च
**ऊर्द्ध** त्रि॰ उत् उपरि ध्वन्यते ध्वन-ड आदेरुरादेशः । उच्चे

ऊर्द्धकण्ठी स्त्री० ऊर्द्धः कण्ठः मुखमस्याः ब० गौरा०ङीष्। महाशतावरीलतायाम् ।

ऊर्द्धजानु त्रि०ऊर्द्धे जानुनी यस्य। उपरिभागे स्थूलजानुयुक्ते

ऊर्द्धज्ञु त्रि० ऊर्द्धे जानुनी यस्य जानुनो वा ज्ञु । उपरिभागे स्थूलजानुयुक्ते । [गजारातौ पशुभेदे

ऊर्द्धपाद पु०ऊर्द्धाः पृष्ठस्थाःचत्वारः पादा अस्य । शरभाख्ये

ऊर्द्धपुण्ड्र पु० ऊर्द्ध ऊर्द्धमुखः पुण्ड्रः इक्षुयष्टिरिव । ललाटस्थे ऊर्द्धमुखे पुण्ड्रेक्षुवत् रेखात्रयात्मके तिलकभेदे । तद्धारणे विधिनिषेधादिकं हृहदभिधाने वक्ष्यते ।

ऊर्द्धम् अव्य० उद्-ह्वेञ् डमु आदेरूरादेशश्च । ऊर्द्धशब्दार्थे ।

ऊर्द्धमान न० ऊर्द्धमारोप्य मीयते येन मा-ल्युट् । पलकर्षादिमिते पाषाणादौ (वाटखारा) । तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमुन्मीयते । उच्चताप रच्छेदकपरिमाणे च ।

ऊर्द्धरेतस् पु० ऊर्द्धं न पतत् रेतो यस्य । महादेवे,सनकादौ सन्न्यासिनि, भीष्मे च ।

ऊर्द्धलिङ्ग पु० ऊर्द्धमुत्कृष्टं लिङ्गं चिह्नमस्य । महादेवे ऊर्द्ध लिङ्गं विरूपाक्षमिति सन्ध्याङ्गमन्त्रः ।

ऊर्द्धलोक पु० कर्म्म० । स्वर्गे ।

ऊर्द्धासित पु० ऊर्द्धमुपरिभागे असितः कृष्णः आसितो वा । कारवेल्ल (करला) ऊर्द्धोपविष्टे त्रि०।

ऊर्म्मि पु० स्त्री०ऋ-मि-अर्त्तेरुच्च । तरङ्गे, प्रकाशे, वेगे, वस्त्रसङ्कोचरेखायाम्, पीडायाम्, उत्कण्ठायाम्, बुभुक्षादिषु, षट्सु च 'यथा बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ । शोकमोहौ,शरीरस्य जराम्मृत्यू षडूर्म्मयः' इति । "पङ्क्तीकृतानामश्वानां गमनेऽवनमनाकृतिः । अतिवेग समायुक्ता गतिरूर्म्मिरुदाहृते'त्युक्तलक्षणायामश्वगतौ स्त्री०

ऊर्म्मिका स्त्री० ऊर्म्मिरिव कायति कै-क । तरङ्गवत्प्रकाशमाने अङ्गुरीयके । स्वार्थे कन् । तरङ्गादौ च ।

ऊर्म्मिमत् त्रि० ऊर्म्मिरिव वक्रताऽस्त्यस्य मतुप् यवा० मस्य न वः । वक्रे तरङ्गवति च ।

ऊर्म्मिमालिन् पु० ऊर्म्मिमालाऽस्त्यस्य इनि । समुद्रे ।

ऊष पु०ऊष-रुजायां क । कारन्दि, प्रभाते,रन्ध्रे चन्दनाद्रौ च

ऊषण न० ऊष-ल्युट् । मरिचे,पिप्पलीमूले,शुण्ठ्याञ्च । (चिता) चित्रके पु० । पिप्पल्यां चव्ये च (चइ) स्त्री० ।

ऊषर त्रि० ऊष+मत्वर्थीयो रः । ऊषवति क्षारमृत्तिकायुक्ते देशे यस्मिन्नुप्तं बीजं न प्ररोहति ।

ऊषरज न० ऊषराज्जायते जन-ड । (पाङ्गा) लवणभेदे ।

ऊषवत् त्रि० ऊष-मतुप् मस्य वः । ऊषरभूमौ ।

ऊष्मन् पु० ऊष-मनिन् । शोष्म व्याकरणोक्तेषु सोष्मवायुनोच्चार्य्यमाणेषु शषसहरूपेषु वर्णेषु ।

ऊह वितर्के भ्वादि० आत्म० सक० सेट् । ऊहते औहिष्ट ।

ऊह पु० ऊह-घञ् वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्व्वपक्षनिवारणेन, उत्तरपक्षव्यवस्थापनेन निर्णयरूपे परीक्षणे, अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्व्वके अन्वययोग्यविभक्त्यादिकल्पने, यथा पार्व्वणे सौम्यास इति बहुवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् पदान्तरेणाकाङ्क्षापूरणे च । [च ।

ऊहा स्त्री० ऊह अ स्त्रीत्वात् टाप् । अध्याहारे ऊहशब्दार्थे

## ऋ

ऋ गतौ भ्वा०पर०सक०अनिट् । ऋच्छति। आरत् आर्षीत् ।

ऋ गतौ जुहोत्यादि० पर०सक०अनिट् । इयर्त्ति आरत् ।

ऋ हिंसायां स्वा०पर०सक०अनिट् । ऋणोति । आर्षीत् ।

ऋक्थ न० ऋच-थक् । धने स्वर्णे,स्मृतिप्रसिद्धे दायरूपे धने च

ऋक्ष पु० ऋष-स किच्च । भल्लूके। नक्षत्रे मेषादौ च पु० न० ।

ऋक्षगन्धा स्त्री० ऋक्षान् गन्धयति हिनस्ति गन्ध-अच् । ऋषि जाङ्गलीवृक्षे. महाश्वेतायां, क्षीरविदार्य्याञ्च ।

ऋक्षगिरि पु० कर्म्म० । कुलाचलभेदे ऋक्षनामके पर्व्वते ।

ऋक्षराज पु० ऋक्षाणां राजा त० टच् । जाम्बवति, चन्द्रे च

ऋक्षवत् पु० ऋक्षाः सन्त्यस्मिन् मतुप् मस्य वः। नर्म्मदातीरस्थे पर्व्वतभेदे ।

ऋग्वेद पु० ऋक्प्रधानो वेदः । देवदैवत्ये स्वनामख्याते वेदभेदे

ऋच स्तुतौ तुदा०पर० सक० सेट् । ऋचति आर्चीत् ।

ऋच् स्त्री०ऋच्-क्विप् ।अर्थवशेन नियताक्षरपादयुते वेदांशे ।

ऋच्छ मोहे मूर्त्तौ गमने च तुदा० पर०सक०अक०च। सेट् । ऋच्छति आर्च्छीत् । आनर्च्छ । [आन्र्छे

ऋज गतौ अर्जने च भ्वा०आत्म०सक० सेट् । अर्जते आर्जिष्ट

ऋजीष न० ऋज-ईषन् किच्च । भर्ज्जनपात्रे कटाहादौ । धने, नरकभेदे च ।

ऋजु त्रि० ऋज-कु । सरले। स्त्रियां वा ङीष् ऋज्वी ऋजुः ।

ऋण गतौ तना०उभ०सक०सेट् । अर्णोति ऋणोति, ऋणुते आर्णीत् आर्णिष्ट ।

ऋण न० ऋ-क्त नि० नत्वम् । अधमर्णेन उत्तमर्णात् पुनर्देयत्वेनाभ्युपगम्य गृहीते धने, (धार) जले,दुर्गे, दुर्गभूमौ च । देवर्षिपितृगणोद्देशेन यथाक्रम यज्ञवेदाध्ययनपुत्रोत्पादनरूपे ऽवश्यकार्य्यकर्त्तव्ये ऋणमन्त्यमवेक्षीति रघुः ।

**ऋणमत्कुण** पु० इदम् ऋणं मम देयमिति कुणति अभ्युपगम्य शब्दायते ऋण+अस्मद् कुण-क। नग्नके प्रतिभुवि (जामिन)

**ऋणमार्गण** ऋणं परकीयमृणमात्मीयत्वेन मार्गयति चुरा० मृग-ल्युट्। प्रतिभुवि। (जामिन)।

**ऋणमुक्ति** स्त्री० मुच-क्तिन् ६त०। ऋणशोधने।

**ऋणादान** न० ऋणस्यादानम्। उत्तमर्णेनाधमर्णात् दत्तधनतुल्यधनस्य सवृद्धिकग्रहणे अष्टादशव्यवहारमध्ये व्यवहारभेदे। "तेषामाद्यमृणादान"मित्यादि स्मृतिः।

**ऋणिन्** पु० त्रि० ऋण+मत्वर्थीय इनि। ऋणवति अधमर्णे ऋणग्रस्ते 'ऋणी न स्याद् यथा पिते'ति स्मृतिः।

**ऋत** गतौ (सौत्रः) पर० सक० सेट्। ऋतीयते आर्त्तीयिष्ट आर्त्तिष्ट

**ऋत** न० ऋ-क्त। 'ऋतमुञ्छशिलं ज्ञेय'मित्युक्तेः ब्राह्मणस्य उपजीव्यवृत्तौ मोक्षे, जले, कर्म्मफले "ऋतं पिबन्ता"विति श्रुतिः सुप्रिये वाक्ये मानसादिसत्ये च। दीप्ते, सत्ये, पूजिते च त्रि०।

**ऋतधामन्** पु० ऋतं सत्यं धाम यस्य। परमेश्वरे, विष्णौ च।

**ऋतम्** अव्य० ऋत-कमि। सत्यमित्यर्थे।

**ऋतम्भरा** स्त्री० ऋतम् बिभर्त्ति ऋतम्+भृ-अच्। योगशास्त्रप्रसिद्धे विपर्य्यासशून्ये यथार्थज्ञानरूपे चित्तवृत्तिभेदे।

**ऋति** स्त्री० ऋ-क्तिन्। गतौ स्पर्द्धायाम् निन्दायाञ्च। कर्म्मणि क्तिन्। वर्त्मनि मङ्गले च।

**ऋतु** पु० ऋ-तु किच्च। 'शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः। माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादिमे' इत्युक्ते कालभेदे। शोणितदर्शनयुक्ते गर्भधारणयोग्ये स्त्रीणामवस्थाभेदे "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः" इति मनुः। दीप्तौ मासे च।

**ऋतुप्राप्त** त्रि० ऋतुस्तद्योग्यः पुष्पादिः प्राप्तोऽनेन, फलेग्रहौ [अवन्ध्यवृक्षे।

**ऋतुमती** स्त्री० ऋतु+मतुप्। रजस्वलायां स्त्रीधर्म्मिण्याम्।

**ऋतुराज** पु० ऋतूनां राजा ६त० टच् समा०। वसन्ते ऋतौ।

**ऋतुवृत्ति** पु० ऋतूनां वृत्तिः पर्य्यायेणावर्त्तना यत्र। वत्सरे।

**ऋते** अव्य० ऋत (सौत्रः) के। वर्ज्जने विनार्थे च।

**ऋत्विज्** ऋतु+यज-किन्। याजके, 'अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते" इति मनूक्ते स्वानुष्ठेयवैदिकादिकर्म्मकरे।

**ऋद्ध** न० ऋध-क्त। पक्वमर्द्दितधान्ये सिद्धान्ते च। समृद्धे सम्पन्ने च त्रि०।

**ऋद्धि** स्त्री० ऋध-क्तिन्। वृद्धौ, देवभेदे, ओषधिभेदे च।

**ऋध** वृद्धौ दिवा० स्वा० च पर० अक० सेट्। ऋध्यति ऋध्नोति आर्द्धीत् आर्द्धत्।

**ऋफ** दाने हिंसायां निन्दायां युद्धे च सक० श्लाघायां अक० [तुदा०पर०सेट्। ऋफति आर्फीत्।

**ऋभु** पु० अरि स्वर्गे अदतौ वा भवति ऋ+भू-डु। देवे।

**ऋभुक्ष** पु० ऋभवो देवाः क्षियन्ति वसन्त्यत्र क्षि+ड। स्वर्गे वज्रे इन्द्रे च। [स्वादौ ऋभुक्षाः ऋभुक्षाणौ।

**ऋभुक्षिन्** पु० ऋभुक्षः वज्रं स्वर्गोवाऽस्यास्ति इनि। इन्द्रे

**ऋष** गतौ तुदा०पर०सक० सेट्। ऋषति आर्षीत्।

**ऋषभ** पु० ऋष-अभक्। वृषभे, ओषधिभेदे, मुनिभेदे च।

**ऋषभतर** पु० तनुः ऋषभः तनुत्वे ष्टरच्। भारवहने मन्दशक्तौ वृषभे। जातित्वेन स्त्रियां ङीप् वृषभतरी।

**ऋषभध्वज** पु० ऋषभो ध्वजो यस्य। शिवे। वृषभध्वजोऽप्यत्र

**ऋषभा** स्त्री० ऋषभ इवाचरति ऋषभ+क्विप्-अच्। पुमाकारायां स्त्रियां, शूकशिम्बयाम् शिवालतायाञ्च।

**ऋषि** पु० ऋष-इन् किच्च। वेदे, मन्त्रद्रष्टरि मुनौ, अनुष्ठेयकर्म्मज्ञापकस्तत्तदाचार्य्ये, गोत्रप्रवरप्रवर्त्तके मुनौ च।

**ऋषियज्ञ** पु० ऋष्युद्देश्यको यज्ञः। ब्रह्मयज्ञे वेदाध्ययने।

**ऋष्टि** स्त्री० ऋष-करणे क्तिन्। उभयतो धारायुक्ते खड्गे।

**ऋष्य** पु० ऋष-क्यप्। मृगभेदे।

**ऋष्यगन्धा** स्त्री० ऋष्यस्य गन्ध इव गन्धो यस्याः। वृद्धदारके [वृक्षे

**ऋष्यप्रोक्ता** स्त्री० ऋषिभिरप्रोक्ता। शतावर्य्याम्, अतिबलायाम्, शूकशिम्बीवृक्षे च।

**ऋष्यमूक** पु० ऋष्यो मृगो मूको यत्र। 'ऋष्यमूकस्तु पम्पायाः पुरतः पुष्पितद्रुम' इति रामायणोक्ते पर्वतभेदे।

**ऋष्यशृङ्ग** पु० ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गमस्य। विभाण्डकपुत्रे लोमपादराजकन्यायाः शान्तायाः पत्यौ।

## ॠ

**ॠ** गतौ जुहो०पर०सक०सेट्। आर्त्ति आरीत्। आर आरतुः।

## ए

**ए** अव्य० इण्-विच्। दयायां, स्मृतौ आमन्त्रणे, असूयायां, आह्वाने च। विष्णौ पु०।

**एक** त्रि० इण्-कन्। एकत्वरूपप्रथमसंख्यान्विते, केवले, मुख्ये, अन्यार्थे, सत्ये, अद्वितीये, समाने, अल्पे च।

**एकक** त्रि० एक+कन्। असहाये। [परस्परकारके काले च।

**एककार्य्य** त्रि० एकं कार्य्यं प्रयोजनमस्य। एकरूपकार्य्यकरे,

**एकगुरु** पु० एकोऽभिन्नो गुरुर्यस्य। समानाध्यापके सतीर्थ्ये।

**एकचक्र** न० एकं चक्रं यत्र। हरिरथे। सूर्य्यरथे पु०।